॥ श्रीगुरुगुणस्तवनम् ॥

उन्मीलन्नीलनीरेरुहनिवहमहःपुष्टिमुष्टिंधयिश्रीः
श्रीभूदुर्गादृगंतप्रचयपरिचयोदारकिर्मीरभावः ।
स्वैरक्षीरोदनिर्यच्चशिरुचिनिचयाखर्वगर्वापनोदी
पातु श्रीनेतुरस्मान् सपदि बुधजनत्राणदक्षः कटाक्षः ॥ १ ॥

मातस्त्वामुपकल्पिताखिलजगत्सर्गेजभर्गेडिते
चेतो न प्रजहातु जातुचिदिह स्वर्गेपवर्गेल्पि नः ।
लावण्यादधरीकृतामरवधूवर्गे निसर्गेहितं
कारुण्यं कुरु मा कृथा मयि पुनर्दुर्गे विसर्गे मतिम् ॥ २ ॥

श्रीमद्रामाभिरामामितमहिमपदप्रौढपाथोरुहालिः
कृष्णानिष्टामितक्ष्मापरिवृढपटलीपाटनैकप्रवीणः ।
वेदव्यासोपदेशाधिकसमधिगतानंतवेदांतभावो
भूयात् कीशावनीशव्रतितनुरनिलः श्रेयसे भूयसे नः ॥ ३ ॥

उद्वेलव्यासतंत्रव्यवसितनिखिलाभिज्ञहृद्याल्नवद्या–
नंतत्रय्यंतभावप्रकटनघटनासर्वतंत्रस्वतंत्रे ।
संवर्ण्ये मंत्रवर्ण्येरनितरविषयस्पर्शिभिः पावमाने
रूपे लोकैकदीपे प्रसरतु हृदयं मामकं मध्वनाम्नि ॥ ४ ॥

विज्ञानोदर्कतर्कप्रतिपदमधुरोदारसंदर्भगर्भ–
प्रौढानेकप्रबंधप्रकटितभगवत्पादभाष्यादिभावः।
मिथ्यावादापवादप्रकुपितविमतध्वांतसंतानभानु–
र्जीयादन्यैरजय्यस्त्रीभुवनविदिताश्चर्यचर्यो जयार्यः ॥ ५ ॥

श्रीमत्पूर्णप्रबोधप्रकटितपदवीधाविमेधाविधीमत्–
सेनानासीरसीमासमुदितविदिताबाधयोधाधिनेता ।
मायसिद्धांतदीक्षाविघटनघटनासर्वतंत्रस्वतंत्रः
श्रीरामव्यासदासो विलसति विबुधेंद्राभिधः संयमींद्रः ॥ ६ ॥

मायातंत्रामरारिस्मयमपनयतो मध्वसिद्धांतनाम्नो
नेत्राणीव त्रयोऽपि त्रिजगति नृहरेरिंधते यत्प्रबंधाः।
यद्वागद्वैतविद्याचलकुलकुलिशप्रौढिमाढौकते सः
श्रेयो भूयो विदध्यात् सुमहितमहिमा संप्रति व्यासराजः ॥ ७ ॥

चातुर्यैकाकृतिर्यश्चतुरधिकशतग्रंथरत्नप्रणेता
धूतारातिप्रबंधः स्पुटविदितचतुःषष्ठिविद्याविशेषः ।
सोऽयं नः श्रीसुरेंद्रव्रतिवरतनयोऽद्वैतशैवासहिष्णुः
पुष्णातु श्रीजयींद्रस्त्रिभुवनविदितः सर्वतंत्रस्वतंत्रः ॥ ८ ॥

व्याधूतावद्यहृद्यामितकृतिरचनचारुचातुर्यहृष्यत्–
कर्णाटक्षीणिपालप्रतिपदरचितानेकरत्नाभिषेकः ।
पत्रीशारूढलक्ष्मीपतिपदनलिनोदग्ररोलंबलीलो
विख्यातः श्रीसुधींद्रव्रतिपतिरतुलं भद्रमुन्निद्रयेन्नः ॥ ९ ॥

धूतावद्यैरविद्याविघटनपटुभिर्विद्वदभ्यर्थनीयै–
र्वाचः प्राचां प्रवाचामुचयमभजन् यत्कृतग्रंथजातैः ।
संख्यावंतो यमाहुर्मुहुरखिलर्कलामूर्थिमुध्वेलकीर्ति–
र्धीर श्रीराघवेंद्रः स दिशतु सततं भव्यमव्याहतं नः ॥ १० ॥

ये रामव्यासपादप्रणिहितमनसो मध्वतंत्रपतिष्ठा–
धुर्यामर्यादसंवित्सुमहितसुमतींद्रार्यशिष्याग्रगण्याः ।
नित्यत्रय्यंतचिंतापरिणतविशदाशेषतत्त्वावबोध–
प्रख्यातान्तानुपेंद्रव्रतिविबुधमणीन् देशिकानाश्रयेऽहम् ॥ ११ ॥

योगो यः कर्मनामा कविभिरभिहितो यश्च विज्ञानसंज्ञः
शक्तो नासिद्धकायस्तनुमतिरनयोस्तावदावर्जनेऽहम् ।
यश्चोपायैरुपेयः स्थिरफलविधये देशिकस्य प्रसाद–
स्तस्मै तस्य स्तुवीयानिशमपि चरितं राघवेंद्रव्रतींद्रोः ॥ १२ ॥

एष श्रीराघवेंद्रव्रतिवरचरितांभोनिधिः क्वातिवेलः
क्वासौ खद्योतपोतप्रमुषितविभवश्चेतसो न प्रकाशः ।
वंध्यैवातः प्रतिज्ञां तदतुलनिखिलाश्चर्यचर्याभिधाने
स्थानेल्थापि क्वचित् स्यादिह पुनरुदधिस्नानसंकल्पवत् सा ॥ १३ ॥

यद्भानौ यत्कृशानौ यदमृतकिरणे यद्ग्रहेषूदितेषु
ज्योतिर्यत्तारकासु प्रथितमणिषु यद्यश्च सौदामिनीषु ।
संभूयैतत् समस्तं त्वदमितहृदयाकाशनिर्यत् प्रकाशे
धीर श्रीराघवेंद्रव्रतिवर भजते हंत खद्योतरीतिम् ॥ १४ ॥

चित्ते नायुक्तमर्थं कलयति सहसा नाभिधत्ते न सद्भिः
साकं मीमांसते वा न लिखति वचसोद्घाटयत्याशयं स्वम्।
उक्तं नो वक्ति भूयः क्वचिदपि लिखितं नैव निर्मार्ष्टि तस्मा–
दस्माभिः सत्प्रबंधप्रणयनविषये स्तूयते राघवेंद्रः ॥ १५ ॥

धीरश्रीराघवेंद्रं कृतनिजविजयस्रग्धरार्थप्रकाशं
दृष्ट्वा संतुष्ठचेता दशमतिरचिरादभ्यषिंचत् पदे स्वे ।
नूनं वाणी तदीयाननलिनगता तत्कृतस्वप्रियैक–
प्रत्यासंगप्रहृष्टा स्वयमपि तदनु स्वे पदे चाभ्यषिंचत् ॥ १६ ॥

ग्रंथो वादावली द्रागभजत विदितो दुर्मतारण्यादाहा–
दापूर्वार्धप्रतीपक्रमपरिपठितस्वाभिधागोचरत्वम् ।
तस्यश्रीराघवेंद्र व्रतिवर भवतो वायुवंशप्रसूते–
रेतर्ह्युद्दीपनं यत्तदुचितमिति मे मानसी वृत्तिरिंधे ॥ १७ ॥

वंदारुप्राणिचेतःश्रीततिमिरपरीभाव कौशल्यभाजः
तेजस्ते राघवेंद्र व्रतिवर किमिति श्रीमतो वर्णयामः ।
येनैषा चंद्रिकाल्पि त्रिभुवनविशदा सत्पथोदंचितश्रीः
लेभे सर्वज्ञमौलिप्रकटितविभवा त्वत्त एव प्रकाशम् ॥ १८ ॥

धीरश्री राघवेंद्र त्वदतुलरसनारंगनृत्यत्स्वयंभू–
येषाधम्मिल्लभारश्लथकुसुनततीस्त्वद्गिरः संगिरामः ।
याभिः संमिश्रिताभिर्निरवधिवसुधा विश्रुता सा सुधाल्पि
क्षोणीगीर्वाणगम्यं परिमलमतुलं सांप्रतं संप्रपेदे ॥ १९ ॥

प्रायः प्रागन्यदीयातनुतरविवृतिग्रंथवासोविहीना
ह्रीणा नादर्शि धीरैरपि किल युवतिर्भाष्यटीकाभिधाना ।
अद्य श्रीराघवेंद्रव्रतिकृतविवृतिप्रौढकौशेयरत्नं
स्वेहायुक्तं वसाना विहरति सुधियामग्रतः स्वैरिणीव ॥ २० ॥

ग्रंथोल्यं न्यायमुक्तावलिरिति भवता राघवेंद्र प्रणीतो
नूनं मुक्तावलिर्यत् प्रथममुपचितादुद्धृतस्तंत्रसिंधोः ।
प्रोतश्च ज्ञानतंतो तदनु तव गुणप्रौढिमाशंसतां नः
कंठेषु प्रेमभूम्ना बहुमतिविधये वाल्धुना सन्न्यधायि ॥ २१ ॥

हंतनंतोल्णुभाष्ये विलसति भगवत्पादसंवर्णितोल्र्थः
सत्यं प्रत्येतु लोकः कथमिदमधुना तस्य टीकां विना ते ।
धीर श्रीराघवेंद्र व्रतिवर निवसद्विश्वमास्यांतराले
स्तोक्ते तोकस्य शौरेरतिबृशकुपितां तत्प्रसूमंतरेव ॥ २२ ॥

भिन्नैरर्थैरनेकप्रकरणभणितैरद्य मध्वागमाब्धौ
मत्या भूयो विचिंत्य श्रुतिपरिणतया शस्तया संगृहीतैः ।
सूत्रेष्वेकैकशोल्पि व्रतिवर भवता योजितेषु प्रवाचां
मोदोयावन्न तादृक् तव पुनरितरै राघवेंद्र प्रबंधैः ॥ २३ ॥

धीरश्री राघवेंद्रव्रतिवर सुजनानुग्रहव्यग्रचित्तै–
राचार्यैः संगृहीताः कतिचन मनवः सारभूताः श्रुतिभ्यः ।
तानेवोद्धृत्य भूयः श्रुतिषु निदधाता शिष्यवर्गोपक्लृप्त्यै
लोके साधुव्यधायि श्रुतगुणभवताल्ल्चार्यचर्यानुवृत्तिः ॥ २४ ॥

गीतामत्यर्थधूतश्रीतजनदुरितामिंदुवंशप्रसूतौ
व्याचक्षाणे मुरद्विष्यभिजनमभ भद्रमिंदोरनिद्रम् ।
धीरश्री राघवेंद्र त्वयि पुनरनघे हंसवंशोदिते तां
व्याकुर्वत्यद्य भव्यं कथमिव न भजेदाशु मित्रान्ववायुः ॥ २५ ॥

न स्यादीशप्रसादो गुरुवरकरुणमंतरेणेति रूढो
धीरश्रीराघवेंद्र व्रतिवर सुदृढश्चेतसस्ते विपाकः ।
येन व्याख्याय गीतामपि गुरुचरणोदारतद्भाष्यटीका–
व्याख्या विख्यातविद्वन्मणिगणविनुताल्कारि भूयस्त्वयैव ॥ २६ ॥

नानातंत्रप्रसंगत्रिभुवनविदितोदारसारस्वतोऽपि
प्रत्नानेक प्रबंधप्रवचनरचनावित्त तत्कौशलोऽपि ।
शश्वद् व्याख्यातगीताकृतिर्पि विबुधानुग्रहैकाग्रचित्तो
गीतातात्पर्यटीकाविवरणमकरोदद्भुतं राघवेंद्र ॥ २७ ॥

लक्ष्मीनारायणार्यस्तव तनयमणिः सत्सु सर्वेषु धन्यो
यस्मादृग्भाष्यटीकाल्तनुतरविवृतेरंजसा तत्कृतायाः ।
प्रेम्ण विद्वत्सु भूयः प्रचयमभिलषन् राघवेंद्र व्रतींद्र
प्रावोचस्त्वं प्रतीतव्रत निचयमृचामेव भाष्यानुरोधात् ॥ २८ ॥

हृद्यतय्यंतविद्यामुखनिखिलकलातत्त्वबोधैकमूर्ते
धीर श्रीराघवेंद्र व्रतिवर सकलान्येव सुक्तानि सम्यक् ।
व्याकुर्वंतं भवंतं व्यवसितमतयो हंत निध्यासयंतः
सर्वे भूयः स्मरंति व्रतसमितिमणेर्ब्रह्मसूत्रप्रेणेतुः ॥ २९ ॥

यावद्वेदांतखंडप्रवचनकृतिनि प्रेमभूमा न तादृत्
सर्वाम्नायप्रवक्तर्यनुपमचरिते राघवेंद्रव्रतींद्रे ।
इत्येतद्देहभाजामतिविशदरुचौ जागरूकेऽपि लोके
राकाचंद्रे द्वितीयाशशिशकलनतिन्यायमेवानुरुंधे ॥ ३० ॥

हृद्या टीकाल्नवद्या परवुवृतयजुस्सामसंबंधिनी ते
मालिन्यक्षालनांभः स्वयमजनि हरेरुत्तरांगे च मूर्ध्नि ।
सैवर्चा राघवेंद्र व्रतिसमितिमणेल्नन्यसंपर्कभाजां
ओजिष्ठे दक्षिणांगे मृगमदमिलितोदारपाटीरसारः ॥ ३१ ॥

नूनं वाक्यानुरोधिप्रकरणमखिलं नेयमित्युक्तमुच्चैः
प्राचां वाचंयमेन प्रकटितविभवानंतवेदांतवाचा ।
स्वामिन्नेतत्प्रतीयः कथमिव कवयो राघवेंद्र व्रतींदो
येन त्वद्वाक्यजातं प्रकरणनिकरं तावदद्यानुरुंधे ॥ ३२ ॥

विख्यातश्रीसुधींद्रव्रतिसुतभवता साधुगीते सुतर्के
सद्यः प्रत्यर्थिहृद्ये मुनिमणिरचिते तांडवे योजितार्थे ।
प्रत्याख्यातप्रकाशः समजनि भुवने हंत चिंतामणिस्त्वं
ब्रूहि श्रीराघवेंद्रव्रतिविबुधमणे कस्त्वदन्यो वदान्यः ॥ ३३ ॥

प्रौढानेकप्रबंधप्रवचनरचनालब्धविस्रब्धकीर्ते-
स्ते किं न्यायामृतस्याविवरणविधिना राघवेंद्रायशः स्यात् ।
यद्राज्यप्रच्यवेनाखिलभुवनपते राघवस्येव कीर्तिः
लब्दैव प्रत्युतालं गुरुचरणकृतामोदनिर्वाहजन्या ॥ ३४ ॥

वाचा संक्षिप्तया यद्बहुचरितमुपावर्णयस्त्वं मुरारे
किंच श्रीराघवेंद्र व्रतिप रघुपतेस्तेन नो विस्मयेल्हम् ।
किं वादुःसाध्यमस्ति त्रिजगति महतामात्मनः पाणिपद्मे
पश्यामंदो मरंद किलघटजनुषा चोलिराकारि सिंधुः ॥ ३५ ॥

मंत्रिश्रीनीलकंठाभिधमखिमणिना भट्टतंत्रानुबंधे
ग्रंथे तावत्त्वदीये करिणि गुणविदाल्रोपितेल्भ्यर्हणाय ।
कीर्तिस्ते राघवेंद्र व्रतिसुमतिमणे नूनमन्यूनवेगा
दिघ्ङ्नागानारुरुक्षुः स्वयमपि सहसाल्धावदष्टौ दिगंतान् ॥ ३६ ॥

व्यासेन व्युप्तबीजः श्रुतिभुवि भगवत्पादलब्धांकुरश्रीः
प्रत्नैरीषत्प्रभिन्नोल्जनि जयमुनिना सम्यगुद्भिन्नशाखः ।
मौनीशोव्यासराजादुदितकिसलयः पुष्टितोल्यं जयींद्रा–
दद्य श्रीराघवेंद्राद्विलसति फलितो मध्वसिद्धांतशाखी ॥ ३७ ॥

माद्यदद्वैतविद्यावद्गर्वनिर्वापणक्षमः ।
वादींद्रयतिराट् तेने भक्त्या गुरुगुणस्तवम् ॥

(इति श्रीराघवेंद्रार्योभयवंशाब्धिचंद्रमाः
वादींद्रयतिराट् तेने भक्त्या गुरुगुणस्तवम्)

॥ इति श्री वादींद्रतीर्थविरचितं श्रीगुरुगुणस्तवनम् ॥